अपनी सम्प्रदायको निजानन्द सम्प्रदाय कहते हैं। इस दृष्टिसे देखनेपर पता चलता है कि भारतके धर्मात्मा पुरुषोंका सिद्धान्त आत्मानन्दके पानेका ही है। **मुहम्मद साहब** भी यही कहते हैं कि जगतमें जो भी कुछ चैतन्य प्रतीत होता है वह खुदाकी रवानी है, खुदा निरंजन, निराकार, तेजोमय और सर्वशक्तिमान् तथा सर्वज्ञ है। **मोमिन** तो कृपालु खुदाको अपने पास ही देखते हैं। खुदाका अर्थ भी खुद ही होता है। **जिसिसक्राइस्टका** भी यही उपदेश है कि चौथे आसमानपर प्रभु विराजमान हैं। वह प्रभु भक्तोंका आत्मा है, और परम भक्त उस प्रभुको प्राप्त करते हैं। अखिल भूमण्डलमें सर्वोत्कृष्ट कीर्तिको पानेवाले बुद्धदेव भी स्पष्ट कह गये हैं कि प्रेम ही आत्मा है। अतः जगत्के प्रत्येक प्राणीमें अभेद प्रेम रक्खो। तत्त्वज्ञानकी दृष्टिसे देखा जाय तो जैन, वेदान्त योग, सांख्य, बौद्ध आदि सब एकताका ही अनुभव करते हैं। एकता पानेके लिये अर्थात् आत्मानन्दमें अभिवृद्धि करनेके लिये साधनोंको भिन्न भिन्न धर्म मीमांसकोंने भिन्न-भिन्न देश कालमें भिन्न-भिन्न पद्धतिसे समझाया है। अतएव बहिर्दृष्टिसे देखा जानेपर उन मतोंकी क्रियाओंमें भेद जान पड़ता है। तथापि उन क्रियाओंका समन्वय किया जाय तो वे भेद भी अभेद भाव भजने लगते हैं। जैन जिसे पांच महाव्रत कहते हैं, बौद्ध उन्हें पांच शील कहते हैं, और योगी उन्हें पांच यम कहते हैं। वेदान्तके शम, दम, उपरति, तितिक्षा, श्रद्धा और समान भी ऐसे ही हैं। परमहंसोंके वर्तन करने योग्य नियम भी अन्तमें एक ही हैं। प्रत्येक धर्मके नीति, दया, परोपकार, प्रेम आदिके सामान्य और सर्वमान्य नियम भी गृहस्थ धर्ममें समानता तथा उपयोगिताका उपभोग करते हैं। समतादि वैराग्यके लक्षण भी सबमें समान रूपसे ही पाये जाते हैं। ज्ञानी पुरुषोंके वर्तावकी ओर दृष्टि डालते हुए जैनोंका वर्ताव **"मित्ति मे सव्व भूयेसु"** सब प्राणियोंके साथ मित्रता अर्थात् समान भाव रखना चाहिये न्यूनाधिक न होना चाहिये। वेद भी कहता है कि— **"मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे।"** "सबको मित्रकी दृष्टिसे देखना चाहिये।" **'आत्मवत्सर्वभूतेषु'** ज्ञानी पुरुष अपनी आत्माके समान सब जीवोंको देखते हैं। देह मीमांसकोंकी तरफ दृष्टि डालनेपर जैन मुख्य-

तासे, औदारिक, तैजस, कार्मण शरीर कहते हैं। इसी प्रकार वेदान्ती भी उन ही शरीरोंको स्थूल, सूक्ष्म और कारण शरीर कहते हैं। जैन जिसे जाग्रत, स्वप्न, सुषुप्ति और उजागर या तुर्यावस्था मानते हैं, उन अवस्थाओंका वर्णन वेदान्ती भी उसी प्रकार करते हुए सन्तोष प्रगट करते हैं। संप्रति मीमांसकोंके कथनको देखते हुए जैन यह कहते हैं कि—"**परिणामो बन्धो परिणामे मोक्खो ।**" "मनके परिणामसे ही बन्ध और मोक्ष है।" वेदान्ती संकल्पसे सृष्टि मानते हैं। जैनोंका मानसिक अध्यवसाय और परिणाम तथा वेदान्तका संकल्प एक ही बात है। इन प्रमाणोंसे आत्मानन्दकी अभिवृद्धिके साधनोंका यानी धर्मोंका समन्वय करते हुए वे सब अमेद भावमें प्रत्यक्ष समाये हुये दीखते हैं। साधन अभेद होनेसे साध्य आत्मा भी प्रत्यक्षमें अभेद ही समझा जाता है, और अनुभवमें भी यही आता है। अतः प्रत्येक मुमुक्षु जीवको प्रत्येक जीवमें प्रेम भाव रखना चाहिये, और सब जगहोंमें ही सर्वत्र मेरा ही स्वरूप है, यही पाठ पढ़कर अभेद प्रेम रखना चाहिये। हलते, चलते, उठते, बैठते, खाते, पीते इत्यादि सब क्रियाओंमें शुद्ध चैतन्य आत्म-स्वरूप हूं यही भावना रखनी चाहिये। इतना ही नहीं, बल्कि—जगत्‌के सब भूत भी मेरे ही स्वरूप हैं। यह जानकर उनके प्रति अभेद प्रेमकी वर्षा करनी चाहिये। इस प्रकार जो पुरुष सब जगत्‌पर अभेद भाव रखते हैं, वे ही वीतराग हैं, पूर्ण हैं, और कृतकृत्य हैं। धन्य उस वीतराग देवको है कि जिसने निष्पक्षपातसे ऐसा सुन्दर अभेद मार्ग जगत्‌के कल्याणके लिये निःस्वार्थभावसे प्रगट किया है।

ज्ञातार्थस्य पदार्थस्य, ज्ञानं प्रबोधनाद्भवेत् ॥ १५१ ॥ तदनुवादरूपं हि, विज्ञेयं न प्रमाणता । प्रवन्धस्याथ शास्त्रस्य, निर्णेतुं यस्य कस्यचित् ॥ १५२ ॥ विचारोऽत्र प्रकर्तव्यो, नान्यथा सिद्धिरुच्यते । यथोपक्रमप्रारम्भावुपसंहार-समाप्तिकौ ॥ १५३ ॥ अभ्यासः स हि विज्ञेयो, यद्विचारं समभ्यसेत् । अपूर्वं नूतनं किञ्चिद्ग्रन्थो विनिरूपितम् ॥ १५४ ॥ फलं सुपरिणामं चाप्यर्थवादस्तथैव च । प्रशस्तलक्ष्यवाक्यं च, सोपपत्त्युपपादनम् ॥ १५५ ॥ सम्प्रधार्योक्तवाक्यं च, प्रकृतमकरन्दकम् । तदास्वादनं सम्यक्, कर्तव्यं रसतत्त्ववत् ॥ १५६ ॥ कुतस्समस्तजीवास्तु, भव्यमुख्यरसस्य हि । आस्वादनार्थमेवात्र, प्रवृत्ताश्च तृषार्दिताः ॥ १५७ ॥ सुवार्तेयं द्वितीयाऽस्ति, तदेष्टा कर्णेऽपि च ।

आप्यते नाऽपि गोपेन, लभ्यते स्वादनं ततः ॥ १५८ ॥ तदेदमपि ज्ञातव्यं,
गौणतोपाधिकारणम्। पुद्गलस्यैव सम्बन्धाज्जायते न च वस्तुतः ॥ १५९ ॥
सच्चित्सुखे तु गौणत्वमेतदर्थमवेक्ष्यते। यदानादिस्वभावेन, बहिरङ्गत्वमेव हि
अन्तरङ्गत्वदृष्ट्या तु, केवलानन्दरूपकः ॥ १६० ॥ आत्मानन्तकार्मणवर्गणा
सम्बन्धितो भवेत्। 'गुणविकाराः पर्यायाः' पर्यायेण समन्वितः ॥ १६१ ॥
कार्मणवस्तु सर्वत्र, सर्वदा परिवर्तते। परिवर्तनं परं साक्षात्सानुकूलमिदं भवेत्
॥ १६२ ॥ तत्रेष्टाऽनिष्टयोर्योगश्चान्योऽन्यं मिश्रितः स्थितः। प्रद्वेषात्मन्यतः
संविभावादेव दुःखकः ॥ १६३ ॥ सम्बन्धवत्स्वभावाभिवृत्तिः स्वस्य भावना।
कार्यं करोति सर्वत्र, सेयं सर्वं विचारतः ॥ १६४ ॥ सच्चिदानन्दकन्दस्य,
सत्तापाथेति बोधनम्। सुगमत्वेन संविदेद्विपर्येऽखिलभ्रान्तिता ॥ १६५ ॥
अनुमानापमानस्य, करणं जायते ततः। परिणामस्य यस्यास्ति, निमहत्वं ततः
स्फुटम् ॥ १६६ ॥ अतो यस्मिँश्च कार्मणवर्गणानामबाधतः। अत्यन्ताभाव एव
स्याद्विशुद्धं भगवत्पदम् ॥ १६७ ॥ लभ्यते वद्धि परमं, नान्यथा कोटियत्नतः।
परं यत्र नृदेहेन, सहितो भगवत्यपि ॥ १६८ ॥ चतुष्टयमनन्तं च, भाति
तद्भगवत्पदम्। अर्थान्सर्वानतीतादीन्, ज्ञातव्योऽवश्यमेव च ॥ १६९ ॥
यस्मिन्नैश्वर्यवीर्ये च, यशो धर्मश्च ज्ञानकम्। श्रीर्वैराग्यं तथा मोक्षं, इमे
षड्संख्यका गुणाः ॥ १७० ॥ समुदायस्य चाप्येषु, 'भगसंज्ञा' प्रकीर्तिता।
भगवच्छब्दकस्याऽस्य, लक्षणं समुदाहृतम् ॥ १७१ ॥ **कुण्डिननेशनरेशस्य,**
**सिद्धार्थनन्दनेन च। त्रिशलाङ्गजवीरेण, त्रिजगद्गुरुणा मुहुः ॥ १७२ ॥**
सम्पूर्णलीला विज्ञातस्तेन तत्रास्ति लक्षणम्। इति विवेचनेनैव "वीरस्तु भगवान्
स्वयम्" ॥ १७३ ॥ इत्यस्याक्षरशश्चार्थो, भविष्यति समर्थनम्। निरूपणं तथा
तस्य, करिष्यति विचारतः ॥१७४॥ **"ऐश्वर्यस्य समग्रस्य"** इत्यस्यार्थोऽनुक्र-
मतः। भगवद्वीरदेवस्य, जन्मकालात्ततो मुहुः ॥ १७५ ॥ निर्वाणपदप्राप्त्यन्तं,
जन्मकालादनुक्रमात्। निखिलस्येतिहासस्य, प्रत्येकं लघुभावतः ॥ १७६ ॥
सिद्धोऽस्तीति महावीरो, भगवानादिपूरुषः। सम्प्राप्य पूर्णरूपेण, चतुष्टयम-
नन्तकम् ॥ १७७ ॥ अनन्तशक्तियोगेन, सर्वैश्वर्यं समासवान्। अनन्ततेज-
स्तद्वच्च, प्रथमयाऽवस्थया मुदा ॥ १७८ ॥ सकलैश्वर्यसद्भावेन, युक्तश्चासीज्जि-
नाश्रय। स्वर्गजातकपर्यायपूर्तिं कृत्वाऽथ नाकतः ॥ १७९ ॥ स्वर्गात्पूर्णश्च
देवायुः, शरीरं वैक्रियं तथा। एवमाहारसम्पूर्णं, कृत्वा तस्याः शुक्तितः

॥ १८० ॥ त्रिशलायाः समुद्धूय, चतुर्दशविधं पुनः । महास्वप्नं प्रदृष्टं च, स्वर्णवृष्टिरसंख्यका ॥ १८१ ॥ जन्मोत्सवं सुराणां वै, शक्रस्यागमनं तथा । विधातुमुत्सवं सर्वे, सुरेन्द्रसेवनं पुनः ॥ १८२ ॥ प्रतिक्षणसपर्यायाः, सामम्या च मुहुर्मुहुः । नेयमल्पस्य वीर्यस्य, वार्ताखि सुप्रबुध्यताम् ॥ १८३ ॥ स्वसयमस्य येलायां, तेनानन्तस्ववीर्यतः । ऐश्वर्यस्यानुकूलत्वप्रतिकूलत्वयातना ॥ १८४ ॥ इति परिषहं जित्वा, सम्प्राप्य विजयं तथा । जिनत्वं तेन संलब्धं, तदाऽसंख्यसुरासुरैः ॥ १८५ ॥ नरैर्नरेन्द्रैर्देवेन्द्रैः, समुत्कृष्टभयोपशमात् । एतद्वारैव सद्भावाऽनुभवश्च कृतो महान् ॥ १८६ ॥ "स्वयन्तु भगवान् वीर" इति निश्चित्य मानसे । रागाद्यान्तरिकान्शत्रून्, विनिर्जित्य विभुर्जिनः ॥ १८७ ॥ अतश्चानन्तरूपेण, प्राप्स्यनन्तरमेव हि । भगवद्वीरदेवस्य, समग्रैश्वर्यरूपकम् ॥ १८८ ॥ सुस्पष्टं लक्षणं चास्ति, विवरणत्वं तदाधिकम् । निरूपणत्वमेवं च, नावश्यं तस्य वर्णनम् ॥ १८९ ॥ **"समग्रस्य च धर्मस्य"**, लक्षणं संनिरूप्यते । तथा साधनसामग्र्या, धर्मो नाम्नोच्यते बुधैः ॥ १९० ॥ दुर्गतौ पतमानं यो, जीवं धारयते मुहुः । स एव धर्मो विज्ञेयो, यतोऽनन्तसुखोद्भवः ॥ १९१ ॥ दुर्गतौ पतितं तद्वदुदन्तं जीवमित्यपि । संरक्षयुक्तविपथि, तिरोभावं करोति न ॥ १९२ ॥ "स चात्मपुरुषार्थस्य, धर्म इत्युच्यते बुधैः ।" तदाऽऽत्मपुरुषार्थस्य, धर्मसंज्ञा ब्रुवन्ति च । एतदृच्छा तु भगवान्, सदा वीरो हितावहः ॥ १९३ ॥ धर्ममूर्तिस्तथा साक्षादभूदिति निशामय । "परमेष्ठी परञ्ज्योतिर्विरागो विमलः कृती । सर्वज्ञोऽनादिमध्यान्तः सार्व्वः शास्तोपलाल्यते ॥" इत्युक्तानुरोधेन, भूत्वा सर्व्वोपदेशकः ॥ १९४ ॥ सच्छास्त्रद्वादशाङ्गस्य, गिरां प्रख्यानकं पुनः । विधाय शास्त्ररूपे च, कृतवान् परिणतं मुदा ॥ १९५ ॥ "आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम् । तत्वोपदेशकृत्सार्व्वं, शास्त्रं कापथघट्टनम् ॥" शास्त्रमित्थं च निरवद्यं, प्रदाय भगवान् जिनः । स्वीयाभूतमयं रूपं, तथेष्टं सकलं पुनः ॥ १९६ ॥ अनेकान्तं समाश्रित्य, श्रेष्ठोपदेशकैरपि । तथाऽऽदर्शमयाऽनन्तं, चरित्रं नः प्रदर्श्य च ॥ १९७ ॥ एवं म्यानुपमं दिव्यं, श्रावकश्रवणार्हकम् । गृहिधर्ममनागारं, साधुधर्मरहस्यकम्, ॥ १९८ ॥ कृतकृत्यं भव्यसृष्टेः, कृतवान् यः समासतः । विनिर्व्वाणपथादर्शो, भूत्वा भव्यात्मनां मुहुः ॥ १९९ ॥ कार्मणवर्गणानां च, स्वस्मुत्तार्य यत्नतः । लघूंस्तान् कृतवान् सर्वान्, वर्धमानो नयान्वितः ॥ २०० ॥ प्रयात्मकं ययो

द्दिष्टं, रत्नं नयप्रमाणकम् । तत्वनिक्षेपसंज्ञं वै, गम्भीरत्वं महत्वकम् ॥ २०१ ॥ परिपूर्णं तदाऽप्यासीद्बहुलमहत्वयोः । चतुरक्षेण वै तद्व्याख्याने द्वेतने तथा ॥ २०२ ॥ वर्णनं क्वचिदस्त्यीह, ज्ञेयमन्यद्विचारणात् । स्थालीपुलाकन्यायेन, प्रत्येकं वस्तुभावतः ॥ २०३ ॥ किंचिन्मुख्यत्वभावेन, दिग्दर्शनमतोऽकरोत् । निगद्यते पुनः स्पष्टं, भगवद्वीरस्वामिनः ॥ २०४ ॥ निर्वाणं परमार्थेन, सह व्यवहारिकी दशा । कियद्गुणातिरूपेण, तथा पुष्कलभावतः ॥ २०५ ॥ आसीद्यतः सद्वस्तुषु, चमत्सम्बन्धभावतः । गार्हस्थ्यजीवनं तेषां, समुज्ज्वलतयाऽस्ति येत् ॥ २०६ ॥ तत्प्रमाणाङ्गभूतं हि, उपासकदशाङ्गके । सूत्रेऽपि विद्यते तावद्वीमत्ता तत्र दृश्यताम् ॥ २०७ ॥ गृहाश्रमे बहुविधे, कार्यादर्शकरूपिणि । कुर्वन् परिणतं स्वासीत्स्वयं तच्च निशामय ॥ २०८ ॥ (१) 'वीरस्तु भगवान् प्रभुः', पितरावभितः प्रति । पूर्वं गर्भाशये मातुर्जनकस्य च सेवनम् ॥ कृत्वाऽथ दर्शनाद्येवं, ज्ञानानुभवतस्तथा ॥ २०९ ॥ स्वयं प्रतिज्ञां कृतवान्, यावन्मे जननी पिता । जीवतस्तावदत्यन्तमर्हद्दीक्षां सुसंयमम् । योगाभ्यासं न चाहं वै, स्वीकरोमि कदापि हि ॥ २१० ॥ यतो मे जनको माता, मोहदृश्याऽनुरागवान् । न नु समतया दृष्ट्वा, इति चिन्तापरोऽभवद् ॥ यतोऽहमनयोरमत्वे, संन्यासं संयमं मतम् ॥ २११ ॥ चरिष्यामि प्रसङ्गेऽपि, न हेयोऽन्यनयोर्नयः । हृदये पुनराघातः, स्यान्महानिति मे मतिः ॥ २१२ ॥ दुःसाध्यं च भवेत्तस्मात्सहनं चेतसा कुतः । जीवनस्याऽनया रीत्या,, संसारसार्वदेशिकी ॥ २१३ ॥ घटनयाऽनया शिक्षा लभ्यते नो विशामय । पित्रोराज्ञां विना तद्वदौदासीन्यं न कर्हिचित् ॥ २१४ ॥ कोऽपि स्वकस्य गृहारम्भं, सुनिश्चर्यां न धारयेत् । घटनयाऽनया तेषां, बदाज्ञापालनं तयोः ॥ २१५ ॥ विशावश्यकत्वेन, सेवायाश्च कियत्फलम् । संसाध्य दर्शनं तस्य, मौलिकं च विभावयेत् ॥ २१६ ॥ तीर्थङ्करोऽपि भगवान्, प्रथमे जीवनेऽपि यत् । सेवाधर्मस्थापनं वै, कुरुते विश्वभावनः ॥ २१७ ॥ कथ्यतां किं च वीरस्य, स्वामिनश्चेदसद्भुतम् । आदर्शरूपं सेवायाः, पितॄणां किमनल्पकम् ॥ २१८ ॥ महत्वं विषयस्यास्ति, सूक्ष्मदृष्ट्याऽवलोक्यताम् । प्रतिज्येष्ठं भ्रातरं च, अत्युमोदारशीलता ॥ २१९ ॥ नन्दीवर्धननामानं, भ्रातरं भगवान् वृद्धः । एकस्मिन् दिवसेऽवोचत्, मदीयोऽभिग्रहोऽधुना । समाप्तोऽभूद्यतश्चाद्य, भवदाज्ञां प्रज्ञा च ॥ २२० ॥ दीक्षितेक्षां करोम्यद्य, तदा ज्येष्ठोऽब्रवीद्वचः । निर्मोहं च प्रभुं ज्ञात्वा, स्वयं नु मोहपीडितः

॥ २२१ ॥ भवन्तं ज्ञायते शुद्धं, स्वर्गारोहणयोगतः । पितुर्मातुः स्फोटकोर्ध्वे, लवणक्षेपणैः समः ॥ २२२ ॥ भविष्यति न सन्देह, इति कृत्वा दयां भवान् । मदीयकथनेनैव, समुषित्वा गृहे पुनः ॥ २२३ ॥ अब्दद्वयसुपर्यन्तं, दर्शनार्थमुदारताम् । दर्शयेच्चेन्महान् देवानुग्रहः स्यान्मयि प्रभो ! ॥ २२४ ॥ तथैव भगवान् वीरः, कृतवाञ्चान्यथा क्वचित् । भ्रातुः पूज्यतमस्यापि, चेच्छया चापि सम्मतः ॥ २२५ ॥ त्यागोऽननुकूलगमनं, नोचितोऽथ निवृत्तितः । तथापि भगवान् वीरः, स्वयं च जगदीश्वरः ॥ २२६ ॥ ज्येष्ठो भ्राता दर्शनेन, विनयेन च तोषितः । तद्वच्च सुखिनः कृत्वा, ज्येष्ठभ्रातुः सुसेवनैः ॥ २२७ ॥ पाठोऽपि पाठितस्तेन, वर्षद्वयमभूद्गृही । भ्रातुराज्ञानुरोधेन, दीक्षाऽपि नैव धारिता ॥ २२८ ॥ एवं संयमसंकल्पं, हित्वा निर्वाणदं ध्रुवम् । प्राशुकभोजी भूत्वा च, गृहमेवाश्रयत्पुनः ॥ २२९ ॥ धन्योऽसि ! भगवंस्त्वं हि, नाऽप्रसन्नः कृतोऽनुजः । अतः पाठमिमं लोक, स्वयमाप विना श्रमम् ॥ २३० ॥ भगवद्वीरवरस्यास्य, भ्राता पितृसमः स्मृतः । इति ज्ञात्वा सेवया च, सुखिनं तं विधाय च ॥ २३१ ॥ सन्तुष्टत्वेन संस्थाप्यस्तथा मान्योऽनुजो मुहु । तेऽपि रक्ष्याः प्रयत्नेन, धर्मोऽयं व्यावहारिकः ॥ २३२ ॥ तद्वार्द्धस्थ्ये च वैराग्यमष्टाविंशतिसङ्ख्यके । वयस्येव सुसम्पन्ने, पित्रोः स्वर्गतयोस्तदा ॥ २३३ ॥ तदा वर्षद्वयं स्थित्वा, गृहेऽध्यात्मस्वरूपके । चिन्तनं योगिचर्यायाः, समारम्भोऽप्यकारि च ॥ २३४ ॥ तेनाभ्यासयोगतः सम्यग्बोधिता दीक्षणेप्सव । दीक्षाधारणतः पूर्वं, गृहिधर्मे समभ्यसेत् ॥ २३५ ॥ विशेषतो योगचर्यां, यया विशदया सदा । चर्यया च सुभाविन्या, स्याच्चिवृत्तिर्यथाक्रमम् ॥ २३६ ॥ इत्थं तस्याः स्वयं ज्ञानं, जायेत तदनन्तरम् । सहिष्णुतायास्त्यागस्य, भवेज्ज्ञानं तथा पुनः ॥ २३७ ॥ अथावधिक्रियज्ञातमुदारोत्तीर्णता यदि । अभिप्रायोऽस्ति मे चाद्य, सच्चर्यायां विपाकतः ॥ २३८ ॥ भूत्वा दृढस्ततः पादौ, धर्तव्यस्साधुसाधने । न तु पूर्वं ततश्चैवं, विज्ञानां गतिरीदृशी ॥ २३९ ॥ **(२) राजनैतिकशिक्षायाः, शिक्षको** यत्र बालके । अमात्यनृपतीनां च, पुत्राणां भूभुजां पुनः ॥ २४० ॥ यदाऽभूज्ज्ञानमेतद्धि, नरराजसिद्धार्थंगत् । महिष्या त्रिशलयाऽदर्शि, स्वप्नश्चतुर्दशविधः ॥ २४१ ॥ यौवने सार्वभौमश्च, चक्रवर्ती भविष्यति । एतद्वृत्तान्तश्रवणाच्छ्रेणिकेन्दुप्रद्योतनौ ॥ २४२ ॥ दधिवाहनप्रभृतिराजपुत्राः समागताः । भगवद्वीरसेवायां, संलग्नाश्च मुहुर्मुहुः ॥ २४३ ॥ क्षत्रिया-

ह्यंचिता सेवा, ततोऽतिरिक्ते शिक्षणे । प्रवृत्ता भावुकत्वात्ते, सुश्राद्धोचित-कर्म्मणि ॥ २४४ ॥ तेभ्योऽपि भगवान् वीरो, गृहस्थक्षात्रयोरपि । बोधयित्वा च सद्धर्म्मं, सदैतान् सम्प्रयुज्य च ॥ २४५ ॥ व्यवहारेऽथ न्याये च, निपुणत्वं स्वधर्मिणि । नियुक्ता राजपुत्रास्ते, चान्तरङ्गस्वभावतः ॥ २४६ ॥ जाताव-बोधस्तेनायं, धर्मधीश्चतुरन्तकः । चक्रवर्ती तथाऽयं हि, भविष्यति न संशयः ॥ २४७ ॥ तन्निरीहविचारोत्थात्तान्प्रतिस्वर्णवद्रुतः । प्रभावस्तेन ते सर्वे, स्वराज्ये सुखसञ्चयम् । परिग्रहे च सन्तोषं, प्राप्याऽऽगता यथागृहम् ॥ २४८ ॥ राज्यशासनकर्मादौ, दक्षं प्रशासको ह्यभूत् । प्रजारक्षणनिष्ठावान्, भूत्वा तद्-वर्नं कृतम् ॥ २४९ ॥ "दमनं तु शठानां चावनमशठानां तथा । समाश्रितानां भरणं, राज्यचिह्नमिति स्मृतम् ॥ २५० ॥ चरितार्थमेतदुक्तेः, करणे जातं निरन्तरम् । अथातः सम्प्रवक्ष्यामि, वार्षिकदानमुत्तमम् ॥ २५१ ॥ अथ सांवत्सरिकदानम्–दीक्षाधारणतः पूर्वमेकवर्षप्रमाणतः । त्रिंशद्वर्ष-समारम्भे, जिताचारसुभावतः ॥ २५२ ॥ निरीहत्वेन यद्दानं, वीयतेऽनुपकारिणे । इत्यादिदानधर्मस्य, प्रारम्भं कृतवान् मुदा ॥ २५३ ॥ वर्षावधि सुभव्येभ्यो, मानवेभ्यः प्रदत्तवान् । पुष्कलत्वेन दानं यत्सर्वे तेनाऽनृणाः कृताः ॥ २५४ ॥ केऽपि कस्यापि न जाता, ऋणिन इति सुप्रथा । तथा पुद्गलवर्गे च, ममत्वं तु ह्यपाकृतम् ॥ २५५ ॥ रीत्याऽनया पुनस्तेषां, न मोहस्मृतिविभ्रमः । न जातं च ततश्चेयं, शिक्षा नः स्थापिता पुरा ॥ २५६ ॥ नीत्वा संन्यासमैश्वर्यं, भौतिकाच्च तथैयती । समुत्तीर्य पदार्थांस्तु, यतो भाविविकर्म्मणि ॥ २५७ ॥ नात्मावरोधो जायेत, तथारम्भपरिग्रहात् । निवृत्तोऽप्रतिबद्धश्च, भूत्वाऽध्यात्मन्य-मायया । ततो विलीनो भावाश्च, भवेदत्र न संशयः ॥ २५८ ॥ अथ शैशवे निर्भयक्रीडनम् । वस्तुतोऽन्तकपर्य्यन्तं, निर्भयत्वेन संस्थितः । परं भयं न बाल्येऽपि, कृतवान् स कदापि हि ॥ २५९ ॥ विषान्वितोरगं रज्जुमिवो-त्थाप्य प्रक्षिप्यते । श्वापदाजीवसंघौघ, सदासच्चान्ततेजसा ॥ २६० ॥ करोति स्म भवन्तं च,-दृष्ट्वैव दूरमागमजन् । महतो भयङ्करान्देवानसुरान् राक्षसांस्तथा ॥ २६१ ॥ बलिनो विद्विषस्तद्वदनायासेन लीलया । विजित्य जयमाप्नोति, संशयं नात्र कर्हिचित् ॥ २६२ ॥ अथाबोधाभीरकप्रकरणम्–अबोधाऽऽ-भीरसन्ततीनां, गोमहिष्यादिचारिणाम् । कस्मिन्देशे च तेषां वै, संज्ञा 'पाली' ति कथ्यते ॥ २६३ ॥ जल्पद्भिर्मनुजैः सार्कं, मुधैव बहुधर्पणम् । अज्ञान

क्रोधकरणं, क्षेत्रविध्वंसनं तथा ॥ २६४ ॥ प्रतिद्वन्द्विनामिदं कर्म, तेषां सुगममस्ति हि । ध्यानमग्नो वने संस्थः, कायोत्सर्गे व्यवस्थितः ॥ २६५ ॥ तत्क्षणेऽज्ञानावस्थाश्च, रज्जुभिस्ताडयन्ति च । निर्माय तस्य पार्श्वे तु, चुल्हिकां पायसं यदा ॥ २६६ ॥ पाचयन्ति क्षणे तस्मिन्, तापयन्त्यग्नितस्तया । स च वीरतया सर्वं, सोढवांश्च दुःखभाग् ॥ २६७ ॥ एकमेव क्रोप्यबोधो, विनोदेन शल्यकया । वंशस्य तीक्ष्णया कर्णे, भेदितो रक्तधारया; आप्लुतश्च ततः काये, दुर्बलत्वमजायत । तथाऽप्यनुमहस्तस्मै, कृतस्तेन महात्मना ॥ २६८ ॥ नानिष्टं प्रोक्तवाँस्तस्मै, किञ्चिदपि च दुःखतः । दृष्ट्वा समानया तद्वत्समभावनया तथा ॥ २६९ ॥ यातनां सहनशीलोऽप्यभूदाश्रित एव सः । ध्यानावस्था दृढा जाता, मानसीवृत्तिरीदृशी ॥ २७० ॥ मेरुवत्तस्य सञ्जाता, ध्यानवृत्तिः सुनिश्चला । सागरवच्च गम्भीरा, सूर्यवत्सा प्रकाशिका ॥ २७१ ॥ सहिष्णुता समुत्पन्ना स्वर्गेऽपि तत्प्रशंसनम् । सभायां चारु इन्द्रोऽपि, प्रशंसां कृतवान्मुहुः ॥ २७२ ॥ दुर्विदग्धाः सभायां ये, ज्ञानशून्याः सुरास्तथा । विश्वासं नैव कुर्वन्ति, दर्शनांशेन वर्जिता ॥ २७३ ॥ देवाङ्गनासहस्राणि, गृहीत्वैकः समाययौ । परीक्षार्थं भगवतः, सङ्गमश्चाब्रवीत्सुरः ॥ २७४ ॥ "ध्यानव्याजेत्यादि" चेति, वाक्यं तद्विबुधाधमः । ध्यानं तु केवलं देव! व्याजमात्रं प्रदर्श्यते ॥ २७५ ॥ नेत्रे सम्मील्य भगवन्! प्रियां कामपि ध्यायसे । देव! त्वदग्रे वामोऽपि, हावभावसुविभ्रमैः ॥ स्त्रियः कटाक्षपातं हि, कुर्वन्ति स्म मनोहरम् ॥ २७६ ॥ किञ्चिदुन्मील्य नेत्रे च, दृश्यतां नो जगत्प्रभो! कामबाणार्दितास्त्वास्तु, सम्पीड्य हृदयं मुहुः । स्थिताः क्षिप्रं गृहीत्वैव, बाहुं स्ववशमानय ॥ २७७ ॥ भवान् दयालुः षड्जीवरक्षणे सम्प्रवर्तते । परं नो मन्मथो देव! सन्तापं कुरुते रहः ॥ तत्प्रतीकारहेतुश्च, भवानेव हि दृश्यते ॥ अतो वयं भगवतः, शरणं च समागताः ॥ २७८ ॥ वचनार्थमतः स्वामिन्! तवाङ्के पतिता वयम् । देहि नो स्थानं भगवन्! शरणं त्वां हि कृपानिधिम् ॥ २७९ ॥ शरणागता इति ज्ञात्वा, दीनानां त्राहि मारतः । महान् खेदस्य विषयो, यद्य वा रक्षतीश्वर! ॥ २८० ॥ न किञ्चिच्छ्रूयतेऽस्माकं, न चोत्साहं प्रदीयते । त्राता भूत्वा न कुरुते, रक्षामपि दयापरः ॥ २८१ ॥ सुस्पष्टं ज्ञायतेऽनेन, मिथ्याडम्बरनिष्ठो भवान् । यद्वतस्ते वयं कुर्मः, सेवां न त्वं प्रसीदसि ॥ २८२ ॥ कर्णान्ते ते न यूकाऽपि, चलते किमतः परम् । वयं पराजयं मत्वा, ज्ञातवन्तस्तवोऽधिकम् ॥ २८३ ॥ नान्योऽ-

विनिर्घृणतरो, कठोरहृदयोऽपि च । त्वत्समो नास्ति संसारे, परिपक्वो दया-
निधे! ॥ २८४ ॥ एवमुक्त्वा चालयन्तो, ध्यानादुद्विग्नमानसाः । समाश्रित्य
स्वमार्गं ता, गता स्वसदनं प्रति ॥ २८५ ॥ अतोऽस्माकमियं शिक्षा, सामा-
यिके च संवरे । प्रोषधे प्रतिक्रमणे, समाराधनके क्षणे ॥ २८६ ॥ रक्षणीये
दृढा चर्या, यतः स्याच्चलाऽनघा । भूत्वा विषयतस्तद्वद्विजयःस्यादनुक्रमात्
॥ २८७ ॥ इत्युपदेश्य सञ्जातो, शाश्वतां मनसा दृढा । **अथ शरणागतान्
रक्षणम्**—अथार्तांश्छरणापन्नान्प्रति वीरस्य सद्गुरोः । छद्मावस्था त्यागपरं,
निष्कामजीवनं ततः ॥ निर्बाध्याति संसारे, तपश्चर्यानतेन च ॥ २८८ ॥ आर्ताः
सन्तापिताश्चान्यैर्यदा तच्छरणागताः । तेषामाह्वानमादौ हि, शृणोति च यथा-
र्थतः ॥ २८९ ॥ त्यक्त्वा ध्यानं तपश्चर्यां, तेषां रक्षा कृताऽनिशम् । महतोऽ-
साध्यकष्टाच्च, सुरक्षयति तान् श्रमात् ॥ २९० ॥ स चमरेन्द्रो हि शक्रस्य,
ह्यपमानं विधाय वै । पलायतोऽशनिपाताद्रक्षनार्थं च तस्य हि ॥ २९१ ॥
शरणं पादपद्मस्य, समागत्य स्वजीवनम् । शक्रोम्यहं न जेतुं तं, तेनेत्युक्तं यदा
प्रभुः । ततो रक्षितवाँस्तं च, वीरः **सदयवान् जिनः** ॥ २९२ ॥ एकदा
मगधे देशे, मस्करीश गोशालकः । यदा तत्पृष्ठगो जातो, वीक्ष्यमेकं तपस्विनम्
॥ २९३ ॥ परस्तु वृक्षशाखाग्रे, लम्बमानमधः शिरः । कृत्वोर्ध्वपादं यथोग्रं, तप-
स्तपति नित्यशः ॥ २९४ ॥ तज्जटाजूटतो यूका, निस्सृत्य पतिता भुवि । तदा
ता दयया युक्तः, पुनः स्वकचमण्डले । स्थापयति च तं दृष्ट्वा, गोशालश्च
*प्रहस्य वै ॥ २९५ ॥ उवाच नेदृशो दृष्टो, यूकाशय्यातरस्तथा ।* इति दुष्ट-
स्वभावेन, उपहासं कृतवान्पुनः ॥ २९६ ॥ शठं प्रति च शाठ्यं वै, कुर्यादिति
विचार्य च । कोपावेशसमाविष्टस्तपस्वी स्वतपोबलात् ॥ २९७ ॥ नेत्रद्वारेण
प्रति तं, तेजोऽप्रतीक्ष्णरश्मयः । पातिता येन तप्तितो, यातनेवाविदुःसहम्
॥ २९८ ॥ प्राप्य दुःखं ददाहायो, स्वरमन्देन प्राह च । शरणागतं च मां
त्राहीत्येवं वाक्यं जगाद सः ॥ २९९ ॥ तदा पितामहश्चैवं, दयां कृत्वा
स्वनेत्रतः । हिमवच्छीतलं लेश्या, तस्योपरिप्रक्षिप्तवान् ॥ ३०० ॥ तमनार्यं
मृत्युपाशान्मुक्तवान् कृपया मुहुः । विभो! त्वं हि धन्यतरस्त्वदीयेयं कृपा मयि
॥ ३०१ ॥ न कृत्रिमा वास्तविकी, स्फुटं मे सुप्रतीयते । श्रीमद्भगवतश्चेदं,
चरित्रं शिक्षणप्रदम् ॥ ३०२ ॥ प्रविष्टमिति तच्चित्ते, षड्कायप्रतिपालकम् ।
संकटान्मोचनीयं च, प्रथमं चोपदेशनम् ॥ ३०२ ॥ कृतवाँश्च स्वयं साक्षा-

हृदये चावधार्य्यताम् । अपुनरागत्य भावस्य, पन्था तेनैव दर्शितः ॥ ३०४ ॥ **अथ मनुष्यवन्मूकपशुरक्षणम्**—मनुष्यवन्मूकपशूनरक्षयत्स्वयं जिनः । यदा हि वाममार्गाणां, प्रसारमधिकं ह्यभूत् ।, तदा वे दयया हीना, व्याजाद्यज्ञाच कोटिशः । पशवो बहवस्तैश्च, हता मूका निरागसाः ॥ ३०५ ॥ तस्मिन्काले च स्वामिना, घातकास्ते तपोबलात् । अवरुद्धाश्च वीर्येणानन्तशक्त्या तथा पुनः ॥ ३०६ ॥ न हन्तव्या न हन्तव्या, घोषणेयं मुहुः कृता । अवरुध्य भीषणं काण्डं, संसारस्थितप्राणिनाम् ॥ ३०७ ॥ रक्षितायानन्तजीवास्तथाऽसिघातनादपि । तस्यायमुपकारस्तु, धर्मोऽयं च पुरातनः ॥ ३०८ ॥ मुद्राङ्किताः कृतास्तेन, तत्स्मृतिर्वर्ततेऽधुना । महोदयो बालगङ्गाधरतिलकसंज्ञकः ॥ ३०९ ॥ **नेता श्रीभारतस्यासीद्धन्यवादं प्रदत्तवान्** । जैनसमाजवृन्देभ्यो, नैतदाल्पमहत्त्वकम् ॥ ३१० ॥ अपकर्तृपशूद्धारो, मनुष्य इव सत्कृत । हिंसकादेरपकर्तुः, पशोरप्यपचारणम् ॥ ३११ ॥ सदोपेक्षैव सद्भावा, कृता तेविति संस्फुटम् । हिंसावृत्तिरतानां तु, पशूनां वृत्तिपाशवीम् ॥ मोचयित्वा समाधेश्च, दत्वा बोधमनामयम् ॥ ३१२ ॥ सदाचाराधिकारं च, ददाति स्म न संशयः । यथा चण्डकौशिकेन, विषाक्रान्तमहोरगे ॥ ३१३ ॥ वेदना दंशजा शश्वच्छान्त्या सर्वं विशोढवान् । कृपया तं च सन्मार्गे, सदाचारे तथा पुनः ॥ ३१४ ॥ स्थापयित्वा प्रबोधेन, श्रीमुखेन च भाषितम् । चण्डकौशिक ! बुध्यस्व, शान्तियुक्तो निशामय ॥ ३१५ ॥ शब्दा एवं प्रकथिता, नरकाद्येन रक्षितः । पतनतोऽवनं जातो, जगद्गुरुप्रसादतः ॥ ३१६ ॥ शान्त्यैवं सुबोधितोऽपि, सुप्तावस्थां गतोऽप्यसौ । क्षिप्तं जागरितो बुद्धो, विवेकसमशङ्कितः ॥ ३१७ ॥ साधयति स्म कार्यं च, किं मया श्रूयतेऽधुना ॥ एवं विचारितस्तेन, किं शब्दोऽयं कृपामयः ॥ ३१८ ॥ पूर्णा दया च तस्याऽस्ति, न वा चेति विचार्यते । एतद्वाक्यकदम्बानां, न जाने स्वाशयं पृथक् । एतद्रुधिरपानेन, सितां च शर्करामपि ।, तिरस्करोति स्वादेन, नो लब्धा चेदृशी मया ॥, ज्ञाते मयाद्य संचारः, शान्तेरस्य च नाडिषु ॥ ३१९ ॥ आशा नामापि नास्त्यत्र, मृत्युभयस्य का कथा । परमस्ति क्षमायास्तु, पराकाष्ठेति धारय ॥ ३२० ॥ अपकारकारिण्यपि, क्षमा स्वाभाविकी कृता । आवश्यकाधिकानन्ता, शान्त्याख्यकवचोपरि ॥ ३२१ ॥ सन्मार्गे मा च ह्यानेतुं, कियच्छ्लाघ्यो महानपि । समालोचनपूर्वं हि, तस्मै स्वदर्शनं बभौ ॥ ३२२ ॥ जातिस्मृतिकं सञ्जातं, ज्ञानं गतजन्मसार-

कम् । कोऽयं चातिपापात्मा, सञ्चारेशाच्च मां पुनः ॥ ३२३ ॥ पातितवानत्र योनौ, निकृष्टायामिति स्थितिः । जन्मत्रयेणात्र बद्धो, विभो ! वन्दिगृहाच्च माम् ॥ ३२४ ॥ क्षीपणायंत्रणाच्छीघ्रं, मोचय मामिति प्रार्थना । प्राप्य चैवं विसंवादं, विवेकपद्धतिं गतः ॥ ३२५ ॥ सम-संवेद-निर्वेदं, बलादध्यात्मकं रसम् । पिबन्नास्ते सुखेनैव, आयुरन्तिमकान्तकम् ॥ ३२६ ॥ श्वासोच्छ्वासकपर्यन्तं, परमुत्कृष्टसमाधिना । सल्लेखनायाः प्रारम्भं, कृतवान् शान्तितत्परः ॥ ३२७ ॥ अभ्यस्तपारीणमहालाभः पञ्चमके दिने । मृत्वाऽष्टमसहस्रारस्वर्गाधिपिरजायत ॥ ३२८ ॥ धन्योऽस्ति भगवंस्त्वं हि, पशूनपि मनुष्यवत् । श्राद्धधर्माधिकारे च, दत्वा तेभ्योऽपि तान्पुनः ॥ ३२९ ॥ भव्यात्मकांस्त्वया चक्रे, भावुकानथ भावतः । घटनयाऽनया स्पष्टं, सिद्धं जातं पुरातनम् ॥ ३३० ॥ यथा मम प्रियाः प्राणास्तथाऽन्येषां हि देहिनाम् । इत्युक्तेन प्रकारेणाऽहिंसाणुव्रतधारणे ॥ ३३१ ॥ "क्रोधाद्बन्धच्छविच्छेदोऽधिकभाराधिरोपणम् । प्रहाराद्यादिरोधश्चा, हिंसायाः परिकीर्तिता" । जीवान्स्थापितवाँल्लोके, तेभ्यश्चात्मतपोबलात् । शिक्षामभ्यात्मयोगस्य, दत्तवान्ध्याययोगतः ॥ ३३२ ॥ यतस्ते भवतो मुक्ता, पशूनामिति ज्ञायताम् ॥ अथास्पृश्यपरमामुद्धारम्–पतितोऽस्पृश्यकोद्धार, इति सिद्धान्तभावनाम् । संस्थाप्य सर्वजातीनां, मनुष्येषु स्वयं प्रभुः ॥ ३३३ ॥ तुल्यधर्माधिकारश्च, सुप्रदत्तो विधानतः । "क्षिप्रं भवति धर्मात्मा, शश्वच्छान्तिं नियच्छति" इति कृत्वाऽनुवादं च, उच्चावचविभागशः ॥ ३३४ ॥ स्पृश्यास्पृश्यविचारस्य, सेवारतस्थानमुत्तमम् । स च निर्मलसद्वृत्ते, 'हरिकेशबले' यथा ॥ ३३५ ॥ जातो चाण्डालयोनिस्थो, मुनिसङ्घे स्थानमाप्तवान् । ऐतिह्यासिद्धदृष्ट्या तु, शासनेऽस्यापि तस्य हि ॥ ३३६ ॥ उत्तराध्ययनसूत्रेषु, सुवाक्यगौरवेण च । दृश्यते श्रूयते चापि, तत्र हेतुरयं पुनः ॥ ३३७ ॥ यथा 'तेन्दुक' देवोऽपि, तत्पार्श्वं भक्तिमहत्त्व । तस्येदमेव मन्तव्यं, गुणस्थानप्रतिलक्षणम् ॥ ३३८ ॥ यस्य कस्य समारूढो, न दोषं तस्य पातकम् । यद्गुणस्थानसंवृद्धिरुत्तरोत्तरभावतः ॥ ३३९ ॥ न हि तावच्च निर्वाणापुनरावृत्तिसन्निधिम् । मतोऽन्यो धार्मिके तद्वद्व्यावहारिकगे पुनः ॥ ३४० ॥ नो विचारोऽस्ति चाण्डादेः, कर्हिचित्सन्निधानाऽनया । शासनस्य ध्वजावयः, शौकरः पशुघातकः ॥ ३४१ ॥ जातीयस्याप्यभेदेन, विश्रामो विहितस्ततः । भावोऽयं तस्य विज्ञेयः, स्पृश्यास्पृश्यस्य बन्धनम् ॥ ३४२ ॥ शिथिलतरं प्रदर्शयैव,

समूलं तद्विनाशितम् । प्राचीनव्यवहारस्य, सन्मतेन स्थिरं पुरा ॥ ३४३ ॥ विश्वाखिलावतारैस्तैरेवं निर्वहणं कृतम् । यथा शासनपतेर्वीरभगवतः शासनादनु ॥ ३४४ ॥ अयं सारतरश्चेत्थं, विचारस्य हृदा पुनः । **अथ शत्रूणामुपर्यपि-परोपकारिता**–शत्रुं प्रत्युपकारस्य, करणे रुचस्त्वयं प्रभुः । सङ्गमः शूलपाणिश्च, व्यन्तरीकटपूतना । दानवैः पशुभिश्चैवोपसर्गं च महत्कृतम् ॥ ३४५ ॥ इति शत्रुगणैर्दत्तां, यन्त्रणां दारुणां तथा । सहित्वा साम्यभावेन, कृतं परिषहे जयम् ॥ ३४६ ॥ षण्मासान्तं च सततं, ददन्कष्टं महाऽसुरः । तदाऽवस्थगितो भूत्वा, हारितः स गतस्तथा ॥ ३४७ ॥ तदा तन्नयनाम्भोजादश्रुबिन्दुद्वयं निकम् । पतितं च यथा न्याये, इत्यवेहि च मानसे ॥ ३४८ ॥ "कृतापराधेपि जने" इत्याद्युक्तं पुरैव च । अभिप्रायोस्ति तस्यायमपराधगुरुस्तथा ॥ ३४९ ॥ पात्रोऽयं सचितस्यास्य, कुत्सितस्य च कर्मणः । भावि तत्परिणामं हि, कथं सक्ष्यति कुत्र वा ॥ ३५० ॥ दुस्सहं यद्भवेचैतदेतदर्थं निशामय । अहो विश्वायते चात्र, शत्रुपरिशिवस्पृहाम् ॥ ३५१ ॥ कृतमाध्यस्थभावेनौदार्यगाम्भीर्यशौर्यकम् । इति गुणसमूहानां, वैलक्षण्यं क्षमा वरा ॥ ३५२ ॥ महिमा चेति नान्यस्मिन्वीराद्विभे प्रदृश्यते । अनार्यदेशेऽपि तथा, विहारो भ्रमणं तथा ॥ ३५३ ॥ निरन्तर नावरुद्धं, धर्मोत्सवदर्श मुहुः । दर्शनमनार्येभ्यो, धर्म्मकोटिनयाय च ॥ ३५४ ॥ म्लेच्छदेशेऽपि तस्यासीदनिवार्यभ्रमणं मुहुः । तत्राऽपि च भवन्तं हि, कश्चिज्जानाति दूरग ॥ ३५५ ॥ देशान्तरस्थं कश्चिच्च, भेदकं तस्करं तथा । ज्ञात्वा घ्नन्ति च बध्नन्ति, कूपाधो लम्बयन्ति च ॥ ३५६ ॥ ते केचित्तच्छरीरे च, मृगयारसिका मुहुः । सारमेयानवोधाश्च, लगयन्ति च ते पुनः ॥ ३५७ ॥ स्वतीक्ष्णनखाघातैर्दन्तैश्च तच्छरीरके । क्षतं कुर्व्वंश्च जातास्ते, सरुङ्गा स्थगिता रहः ॥ ३५८ ॥ परं स्वयं स गिरिवदचलोऽभूदवनीतले । तथाऽधमा नराश्चेदं, दृष्ट्वा धैर्य्यं सहिष्णुताम् ॥ ३५९ ॥ प्रभावाद्भाविता भूत्वाऽऽश्चर्ययुक्ताश्च तेऽभवन् । ततः पराजिता जाताः, पतितास्तत्पदाम्बुजे ॥ ३६० ॥ ततश्च श्रद्धया जैने, भूत्वा श्रद्धालवो मते । महाव्रताऽणुव्रतयोर्लीनाः संसाधने मुदा ॥ ३६१ ॥ अनन्तां यातनां भुक्त्वा, मिथ्यावादिष्वनार्यकेष्वनिवार्यजनेष्वत्र, जैनधर्मस्य चोत्तमाः ॥ संस्काराः स्थापितास्तेन, सत्यं सत्याग्रहात्मनाम् । कठोरहृदयानां च, लब्धवान् विजयं तथा ॥ ३६२ ॥ चर्य्ययाऽनया नाथ, शिक्षा सञ्जायते परा । भगवतो वीर-

देवस्य, सुपुत्रो निर्भयो भवेत् ॥ ३६३ ॥ अनार्य्यमतिना सप्तलोकानां वीर-
स्वामिनः । धर्मेऽप्यनादिसद्भेऽपि, गत्वा च प्रसरेदिति ॥ ३६४ ॥ तत्रावोध-
नरास्तद्धर्म्मधर्मसम्बन्धविता । आगिनो ये च तत्रापि, धर्मोऽनैकान्तिकस्य हि
॥ ३६५ ॥ संस्थापितो मूकतरस्तोथ श्रीवीरस्वामिनः । सुधर्मस्याप्यनुगामिनः,
कृतवान्स दयापरः ॥ ३६६ ॥ इत्यादिदमहं वक्ष्ये, मदीया मुनिभ्रातरः ।
न दत्तं ध्यानमत्रापि, कदापि न हि सम्मतम् ॥ ३६७ ॥ भूत्वा प्रच्युतदेशस्य,
ग्रामस्य नगरस्य च । पिण्डोलके मोहवशे, ममतायां प्रमादके ॥ ३६८ ॥
कृत्वा कलङ्कितं स्वं च, नोचितं म्लानतां गतम् । तत्रैतत्कारणं ज्ञेयं, प्रार्थनाथ
मुनेरिदम् ॥ ३६९ ॥ वाराणसीति पार्श्वस्य, क्षेत्रं भगवतः परम् । वीरस्य
कुण्डिनपुरी विख्यातं मगधे पुनः ॥ ३७० ॥ विहारदीपिकानाम्न, मण्डले
वर्तते च या । दुःखदेवेन नायातं, मुनिभ्रमणमित्यपि ॥ ३७१ ॥ धर्मप्रचारः
श्रवणे, नायातश्च यदा नये । भगवतो वीरदेवस्य, पंचविंशशतहायनकम् ॥३७२॥
शासनस्य प्रचारः स्यात्तदा किं कारणं वद । तच्छ्रमणसंघस्यार्थं, नास्ति
तस्य च पूज्यवान् । प्रभक्ता ये जनाश्चार्यास्तज्जन्मभुवि मानवाः ॥ ३७३ ॥
तेषु धर्मप्रचारोऽपि, न भवेदिति चिन्तने । लोकनीयाः सुखदेयं, सद्धर्मगम्य-
भ्रातरः । एतदुपस्थितिकालेऽपि, भवन्त्वेवमतं परम् । जैनं तस्य नोदनार्थं,
यद्यस्ति परिचयो महान् ॥ ३७४ ॥ ज्ञातव्यं भवतां नाम, सेनरपति
गजेन्द्रवत् । अतो हि विदुषां सत्क्रियाऽऽप्तमुनीनपि ॥ ३७५ ॥ बुधरत्न-
प्रसिद्धानां, वक्तॄणां सर्वसम्मते । व्याख्यानवाचस्पतीनां', सन्न्यासधारिणां
तथा ॥ ३७६ ॥ चिन्तयामि यदा सम्यक्स्वप्रचारस्य क्षेमकम् । भगवता
वीरदेवेन, समं कुरु विचारकम् ॥ ३७७ ॥ जैनधर्म्मे यथा धर्मवृद्धिस्वाध्यायं
तथा कुरु । भवन्तो तेऽपि चात्रैव, रोगस्य परिवर्जकाः ॥ ३७८ ॥ सम्लोच-
धिरयाख्य, न वा चेति विचार्य्यताम् । अथ भक्तःगृहस्थान्प्रति-स्वभक्तान्-
दस्यान्प्रति जीर्णक-सांकरियादिकम् ॥ ३७९ ॥ पूर्णेवेति स्वधर्मे च, दत्त्वेति
वितृष्णकः । सर्वत्र तथा चातीवप्रशंसा च वर्णिता ॥ ३८० ॥ श्रीमंत्र भक्ति-
भावना, पूर्णापत्र दानादिकम् । मुनिभिक्षुः पूनिकेति, सर्वासि श्रीमित्र पुनः
॥ ३८१ ॥ दानादिकं पवित्रं च, सैनिकस्याऽप्यनुमतम् । जैन संसारकल्याणं,
न हि दरिद्रसरिष्यति ॥ ३८२ ॥ इतोऽग्रिमेऽपि वक्ष्यामि, सुभागमनसूचना ।

यदा भव्यानुभावेभ्यो, भक्तेभ्यश्चापि जायते ॥ ३८३ ॥ नगराच्च बहिर्देवो, निर्जने कानने स्वयम्। वीरश्च भगवान्स्वामी, समायातोऽतिपुण्यतः ॥ ३८४ ॥ शक्रादिदेवैः सर्वैश्च, समवसरणनिर्मितम्। महान् कलरवो जातो, नगरेऽपरिमिता जनाः ॥ ३८५ ॥ धर्मानुरक्ताः श्रोतारो, जिज्ञासव इतीतरे। तेभ्योऽतिरिक्तपश्वादिश्वापदाः पक्षिणस्तथा ॥ ३८६ ॥ आयान्ति समितौ ते तु, रचिते समवसरणके। महत्सम्मेलनं जातं, तदा ते जातिभावनाम्। स्वाभाविकं पाशविकं, त्यक्ता हि वैरभावनाम्। शान्तिच्छटां नीतवन्तो, जातास्ते धर्मतत्पराः ॥ ३८७ ॥ उपदेशानन्तरं भूपाः, सार्वभौमास्तथाऽपरे। राज्यसत्तां परित्यज्य, गृहीतमुनिसुव्रताः ॥ ३८८ ॥ गृहिणोऽपि गृहे स्थित्वा, पश्चाणुव्रततत्पराः। तृष्णाभारं समुत्तार्य, सम्यक्त्वभावमागताः। जीवनं सफलं जाता, कुर्वन्तस्ते पदं परम्। औदासिन्यं स्वभावं, भोग्यं कर्मोपभुज्य च ॥ ३८९ ॥ अन्ते निवृत्तिमार्गं च, लब्ध्वाऽक्षयसुखं पुनः। अनेकानि प्रमाणानि, लभ्यतेऽनेकशास्त्रगा ॥ ३९० ॥ **अथ शास्त्रार्थप्रकरणम्**–अथ शास्त्रार्थवृत्तीनां, वादिना प्रतिवादिनाम्। ऋजुवालुकानद्याश्च, तटे श्यामाकक्षेत्रगे ॥ चतुष्टयानन्तमापन्ना, सद्धर्मप्रतिपत्तये ॥ ३९१ ॥ गोवरमण्डले ग्रामे, 'पडरोणेति' विश्रुते। पावापुर्यां चोपवने, भ्राजते स्म जगत्प्रभुः ॥ स्याद्वादमहावाचा, महानादेन शब्दिताः ॥ ३९२ ॥ दिशाः कुर्वंस्तदा काले, यस्यचिद्ब्राह्मणस्य हि। महाध्वरोत्सवो जातस्तत्रैकादश पण्डिताः ॥ ३९३ ॥ आहूतास्तेनेन्द्रभूतिर्महात्मान्यथ वेदगः। आसीत्तस्याभवंश्छात्राश्चत्वारिंशच्छतसहस्रगाः ॥ ३९४ ॥ वेदाध्ययनसम्पन्ना, विद्यार्थिन इति स्फुटाः। अगणिताना च देवानामभ्ययादि गौतमः ॥ ३९५ ॥ ज्ञानं जातं तथैवास्माऽनेकान्तवादविस्तरा। समायातो जिनेन्द्रश्च, सर्वज्ञो विश्वरक्षकः ॥ ३९६ ॥ शास्त्रार्थं तेन सार्कं वै, रम्यो समवसरणकम्। गच्छति स्म तदाऽऽयान्तं, दृष्ट्वा तं जगतः प्रभुः ॥ ३९७ ॥ आगन्तुकस्य सशिष्यचारं शिक्षणाय च। स्वभाविगणधरस्य, स्वागतं चेन्द्रभूतये ॥ ३९८ ॥ तत्क्रमानसिकं भावं, तस्य संशयदर्शिनम्। तच्छित्तिः कृता तेन, तथा संवेदिनी मुहुः ॥ ३९९ ॥ शिक्षा दत्ता प्रभावोत्था, चार्हती चोपकारिणी। तदिन्द्रभूतये तद्वद्वेदवेदिनाय च ॥ ४०० ॥ महानुभावश्रेष्ठेभ्यः सुप्रदत्ता गरीयसी। हेयं ज्ञेयमुपादेयमिति च त्रिपदी मता ॥ ४०१ ॥ ज्ञानोत्पादयित्री या, सोत्पादव्ययध्रौव्यकम्। षड्द्रव्यात्मकं चैव, द्वादशाङ्गगिरा सह ॥ ४०२ ॥ चतुर्दशात्मकं पूर्वं, यदुक्तं

तद्विशालके । ज्ञाने परिणतं कृत्वा, स्थविरान् रुद्रसंस्थ्यकान् ॥ ४०३ ॥ गणधर-पदे सम्यक्स्थापिताः सर्वसंयतैः । प्रथमं चेत्यमानेशं, स्वकीयानन्तज्ञानके ॥ ४०४ ॥ लाभमुत्पाद्य तेभ्यश्च, खसादिद्विग् ४४०० द्विजातये । दत्ता निर्व्वाण-मार्गं च, तत्पथि पथिकाः कृता ॥ ४०५ ॥ **अथानाथबालिकोद्धरणम्**-अथा-नाथबालिकाया, उद्धरणं कृतं स्वयम् । सार्द्धद्वादशवर्षाणां, तथा पञ्चदशे दिने ॥ ४०६ ॥ [ छद्मावधौ दुष्करं च, तपः कुर्व्वंश्च विश्वदृक् ] तदैकस्मिँस्तु कालेऽथ, त्रयोदशविधात्मकः । कृतो भीष्माभिग्रहश्च, कृतवान् पणधारणम् ॥ षण्मासान्तं न यत्पूर्णं, न शक्यं भवितुं पुनः ॥ ४०७ ॥ परन्त्वयं स्वचलितस्तत्सारणमथा-प्रभुः । प्रयागमण्डलस्तद्वत्कौशाम्बीं नगरीं ततः । भ्रमन्संश्चन्दनाख्याया, बालायाः कर्तुमुत्सुकः । सद्धारं धनवाहस्य, श्रेष्ठिनश्च गृहाङ्गणे ॥ ४०८ ॥ समा-गत्य स्थिरश्चाभूद्गृहस्यास्य सुशोभके । द्वाराग्रे च सती बाला, चन्दनाऽतीव-भक्तितः ॥ ४०९ शृङ्खलानिगडैर्बद्धा, तिष्ठतीति विलोक्य च । अन्वेषते तथा मार्गं, भगवतो धर्म्मतत्परा ॥ ४१० ॥ अनाथा वन्दिनी वीरं, भगवन्तं निरीक्ष्य च । सुहर्षं प्रकटं कृत्वा, कुर्व्वती भाववन्दनाम् ॥ ४११ ॥ अहं जगद्गुरो ! देव ! सूर्प्पे स्नेहमये पुनः । माषात्मबाकुली चास्ति, तद्गृहीत्वा च मां पुनः ॥ ४१२ ॥ कृतकृत्यां द्रुतं कुर्या, इति मे प्रार्थना शृणु । समयेऽत्रच तस्याश्च, प्रफुल्लितमुखा-म्बुजम् ॥ ४१३ ॥ परं भगवतश्चास्या, स्वल्पमस्मिन्नभिग्रहे । तथाऽन्यच्छुभग्रहस्य, न्यूनत्वं चावलर्तत ॥ ४१४ ॥ स्वयं स च परावृत्य, चलन्नानीपद्धतिस्ततः । चन्दनाऽपि तदाऽपश्यद्भाग्यहीना गृहं मयि ॥ ४१५ ॥ स्वयं देववरो भानुः, समागत्यालयं मम । स्वप्रभावं समाहृत्य, पश्यन्त्या मे गतोऽस्तकम् ॥ ४१६ ॥ अस्यां दशायां दीनायाश्चाबलायाः प्ररोदनम् । विनाऽन्यद्दर्शनं तस्यै, नास्ति कस्य प्रयोजनम् ॥ ४१७ ॥ चक्षुर्भ्यां यमुनागङ्गाप्रवाहो वहति द्विधा । महाद्याङ्कुवीरस्या-भिग्रहं पूर्णतां गतम् । स्वाभिग्रहस्य दृष्ट्वा तु, स्वादूप्य भक्तितत्परा । सद्य सत्कानुरक्तायाः [ कठन् ] माषधान्यस्य बाकुलम्* । गृहीत्वा दानाविधयाद्देर्मुक्ताथ बन्धनात् । केवलज्ञानभवनात्पश्चादार्यात्वमाप्स्यति ॥ ४१८ ॥ दत्ता स्वतन्त्रतां तस्यै, जीवन्मुक्त्यन्वयोगतः । कथितश्चातिकृतेन, लब्ध्वा तत्त्वमयमुत्तमम् ॥ ४२० ॥ शेषमायुं प्रभुस्त्वा च, निर्व्वाणपदमागतम् । वीरस्तेति प्रभावाच्चा, कन्याणनालके

---

* अभिपक्वाक्षतधान्यस्य बाकुलेति भाषायाम् ।

यातनातो । धर्म्मकाण्डाच्चलितान्किञ्चित्तिमिच्छते । कस्मिंश्चित्समये ( राजगृहाधीशः
सुश्रेणिकः ॥ ४४४ ॥ तनयस्तस्य चैकोऽस्ति, मेघकुमारनामकः । श्रुत्वोपदेशं
वीरस्य, संवेगात्प्रतिजगृहे ॥ ४४५ ॥ दीक्षोत्तमा तदा, तस्य, दीक्षितस्य नवस्य च ।
सर्वमुनीनां पश्चात्तु; तदाऽऽसनमवेशयत् ॥ ४४६ ॥ परन्त्वावश्यकं कार्यं, कर्तुमा-
यान्ति यान्ति च । मुनयोऽनुपयोगत्वान्निशायाः समयस्तथा ॥ ४४७ ॥ तेषामी-
र्याभङ्गवशात्पादस्पर्शो मुहुर्मुहुः । जातस्ततः पराभूय, व्याकुलोऽभून्महामनाः
॥ ४४८ ॥ निद्राऽभावसमापन्नो, विचारे तत्परोऽभवत् । किं मेघायुर्मयीयं च,
पादप्रहरणाहतम् ॥ ४४९ ॥ प्रसन्नैवं व्यतीतं स्यात्कालसे मुनिर्मतः । प्रातरेव
हि दत्वेदं, धर्म्मोपकरणं मुदा । गत्वा च जननीं स्वां च, मिलिष्यामि सुप्रेमतः
॥ ४५० ॥ साधुरथैव सम्भूय, स्खलितः पादस्मतः । नेत्थं विनिर्वहेत्याय, प्रभुं
पूर्वमेव तत् ॥ ४५१ ॥ सदा चात्राति मत्यैव, तदाऽप्यादरतोऽवदत् । अथ भूत्वा
सुसंयमवान्न जानन्ति कथंचन ॥ ४५२ ( न जानन्ति कथं चाथ, 'किमाश्चर्यमतः
परम् ] निदानन्त्वत्र प्रातर्हि, मुनिर्मेघकुमारकः । वीरस्य चरणाम्भोज-
वन्दनार्थं समागतः ॥ ४५३ ॥ गुरोः प्रष्टुं समुत्सुका, लब्धा तस्य मुनेरदः ।
नतं शिरश्चकाराशु, कुमारः क्षत्रियस्य च ॥ ४५४ ॥ स त्वन्तेवासी भूत्वा च,
तस्य च सद्गुलाश्रयः । संसारतारके वीरो, निशादत्तं च ज्ञातवान् ॥ ४५५ ॥
सर्ववृत्तं निशाजन्यं, निगद्य पुनरुक्तवान् । रात्रौ वत्स ! मुनीनां च, पादप्रहार-
स्तत्त्वया ॥ ४५६ ॥ लब्धा निद्रा न स्वान्तर्वै, तेनार्तध्यानमागतम् । अतो
निद्रा सुविच्छिन्ना, निद्राऽतीताऽविकल्पदा ॥ ४५७ ॥ परं विवेकसन्धानं, मार्गयस्त्व
समागतः । तदा स्वास्पूर्वकं ज्ञानं, जन्म प्राक्तनिकं तव ॥ ४५८ ॥ तत्र कष्टं
महत्कि वा, निशापादप्रहारकम् । एतावन्तं प्रतिश्रुत्य, मेघनाम्नो मुनेर्हृतम् ४५९
जातिस्मरोऽभवत्पूर्वजन्मद्वयगतस्य च । तिर्यग्भावगता वार्ता; समारूढा स्मृतेः
पथम् ॥ ४६० ॥ पूर्वसंवेदिनी तद्दृष्ट्वा जातेयमद्भुता । तदा योगी पुनर्जातो,
दीक्षादानविधानतः ॥ ४६१ ॥ तथैकमासपर्य्यन्तं, भूत्वा सल्लेखना गुरोः । अन्ते
द्वाविंशतिसर्गस्याहमिन्द्रोऽभवत्ततः ॥ ४६२ ॥ कम्पमाननगं चेमं, सुस्थिरं कृत-
वान्पुनः । भगवान्वीरदेवश्च, ज्ञातव्यमुत्तमं तपः ॥ ४६३ ॥ प्राणभृतामसंख्या-
नामित्थं भ्रमरजालके । मग्ना नौरुद्धृता वीरदेवेन भवचक्रतः ॥ ४६४ ॥ भवा-
म्भोधेस्तारकत्वात्तारकः परिगीयते । निपुणः अक्रिमत्त्वाच, कर्तेत्यपि च कथ्यते
॥ ४६५ ॥ अथ सद्दृष्टं प्रति—यदानन्दकामदेवादिश्रावकानां गृहमेधिनाम् । गृहिणः

ग्रन्मुक्तावसङ्ख्यानां, प्राणिनां प्रेपके पतौ ॥ ५१२ ॥ मुक्तौ श्रियः समभाया, लक्षणेति समन्वये । निरूपणे तथाऽवस्यं, यत्नः कार्यो विशेषतः ॥ ५१३ ॥ यश्च सङ्कपतेश्चापि, वसुसम्पत्तितो *रहः । सम्पत्तिमन्तं कृतवानिति जानीत ज्ञानतः ॥ ५१४ ॥ **वैराग्यस्य समग्रस्य**—चतुष्टयाऽनन्तसम्पत्प्रातिहार्य्यादिनेकधा । धर्मसम्पत्सङ्घसम्पत्कीर्तिसम्पत्तथाऽपरा ॥ ५१५ ॥ अष्टैव प्रातिहार्य्यास्स्यासुरवैभवसम्पदः । एतावन्त्यो यत्र सन्ति, भगवत्यखिलेश्वरे ॥ ५१६ ॥ तद्वार्हत्स्योऽपि वैराग्यसम्पत्तिरुपबृंहिता । तथाऽनासक्तिसम्पत्तिर्वीर्वर्ति स तत्र वै ॥ ५१७ ॥ [तदद्भुतं चमत्कारं, को वा वर्णयितुं क्षमः ॥] पुष्कळं भोगमासाद्य, तत्रोत्पद्य स्वयं प्रभुः । पङ्कजं पङ्कजमिव, पृथगेव विभाव्यते ॥५१८॥ सेयं तत्त्यागवैराग्यसम्पत्तिः सिद्धिदायिनी । विद्योतते भगवति, वैराग्यस्येति लक्षणम् ॥ ५१९ ॥ **मोक्षस्याथ समग्रस्यापुनरावृत्तिरूपकः** । समन्वयो यथार्ह वै, जायते तन्निशम्यताम् ॥५२०॥ आचाराङ्गं तथा व्याख्याप्रज्ञप्त्यादिरूपकम् । **आधारभूतेतिहासाय, सिद्धं तन्निर्विवादतः** ॥५२१॥ महावीरभगवान् दीक्षादशातः पूर्वतोऽपि वा । पुद्गलस्यप्रबन्धेषु, पदार्थे बन्धने पुनः ॥५२२॥ भावसंयतमुक्तोऽभूत्सापेक्षा विद्यते विभोः । सर्वथा ते च मुक्त्यर्थं, सचेष्टाः सन्ति भावतः ॥ ५२३ ॥ सम्बन्धे चात्र चैतात्कथनं जातमलं तथा । अनन्तचतुष्टयमाप्य, प्रातः सिद्धः सकायिकः ॥ ५२४ ॥ जीवन्मुक्तोऽभवत्तत्र, विज्ञेयं तच्चारित्रकम् । प्राणिनस्तस्य शरणं, समायातास्च येऽनिशम् ॥ ५२५ ॥ स्वयं तेभ्यः मुमोक्षस्य, सम्प्रदायरहस्यकम् । स्वसमाख्ये कृतात्मेन, तत्सहाय्य निषेवनम् ॥ ५२६ ॥ मुक्तिमूलं परं स्थानं, तदस्तीति विभावय । तत्र मोक्षसमग्रस्य, समन्वयप्रसक्तितः ॥ कथं प्रभावकारः स्यादित्थं च बुध्यतां धिया ॥ ५२७ ॥ अतो भगवते **मोक्षसमग्रस्य** समन्वयः । षष्ठमलक्षणस्याऽयं, समन्वय इति स्फुटम् ॥ ५२८ ॥ **अथोपसंहारः**—एवमुक्तषडाख्यानाऽऽलक्षणानां समन्वयात् । सिद्धो जातस्तु जगति, "वीरस्तु भगवान् स्वयम्" ॥५२९॥ अस्ति सर्वज्ञ इत्थं यः, समदर्शी च तीर्थकृत् । हितैषी सर्वजीवानां, तथाप्तोऽनन्तशक्तिमान् ॥ ५३० ॥ शास्ता सार्व्वः स एव स्यात्कामदुःखहारीहार्तिहः । अतस्तल्लक्षणं प्रोक्तं, निगमं तद्विबोधतः ॥ ५३१ ॥ "गुकारस्त्वन्धकारस्तु, रुकारस्तन्निरोधकः । अन्धकारविनाशेन, गुरुरित्यभिधीयते" ॥ अज्ञानं च गुशब्दस्य,

---

* आचार्याणामष्ट सम्पदिति भावः ॥

रुशब्दस्तन्निवर्तकः । मिलित्वा च द्वयोरर्थो, गुरुरित्युच्यते बुधैः ॥ ५३२ ॥
अज्ञाननाशनाज्जातो, जगद्गुरुरथोच्यते । सर्व्वज्ञश्चापि सोऽत्रैव, "वीरस्तु भग-
वान्स्वयम्" ॥ ५३३ ॥ यतोऽन्यदज्ञाननाशं, कृत्वा च स स्वयं प्रभुः । "त्रिपाण"
मित्याद्यखिलो, न्यायस्तत्र सुघट्यते ॥ ५३४ ॥ रत्नत्रयस्वरूपस्य, "वीरस्तु भग-
वान्स्वयम् ॥" वारयित्वा ज्ञानमदो, देवगुर्वो रहस्यकम् ॥ ४३५ ॥ तथा धर्म्म-
रहस्यं च, सम्प्रकाश्य स्वयं प्रभुः । सर्व्वसंसारमुक्तेश्च, मार्गं संवरनिर्ज्जरे ५३६
ज्ञापितोऽप्यस्ति यस्येत्थं, कारणादनुभवस्य हि । मननध्यानमोक्षस्य, साधनाऽऽ-
संक्तचेतसः ॥ ५३७ ॥ जना हि निखिलाः सन्तः, शीघ्रं प्राप्नुर्महात्मनः । अतो
हि भगवान्वीरो, भवस्यास्याखिलस्य च ॥ ५३८ ॥ कालेऽवसर्पिणीसत्के, चतु-
र्विंशतिसङ्ख्यकः । तीर्थङ्करोऽन्तिमोऽप्यास्ति, गुरुर्वन्द्योऽखिलैर्नरैः ॥ ५३९ ॥
तद्दर्शितोऽस्ति यथार्था, प्यासो धर्म्मो दिगन्तरे । जैनधर्मः स एवात्र, सर्व्वदा
नाऽपरः, क्वचित् ॥ ५४० ॥ इत्थं भगवतो महावीरदेवोपदेशतः । शुद्धभावेन
परमसत्त्वनिक्षेपहेतुकः ॥ ५४१ ॥ पदार्थं स्वात्मनीत्येवं, कृत्वा सन्धानमेव च ।
तदागमस्य सिद्धान्तमार्गस्य मननं तथा ॥ ५४२ ॥ कुर्य्यंश्चानुभवं तद्वच्छुक्लध्यानाधि-
वेशनम् । गद्गदान्वितकण्ठेन, गायंस्तद्गुणविग्रहम् ॥ ५४३ ॥ समयं मा प्रमादी-
श्चेति. चर्यासमाहितः । अमूल्यममयं, स्वस्य, यापयन्तु सुध्यानतः ॥ ५४४ ॥
धन्यः [illegible] एव लोकेऽस्मिन्नीर्निर्माय. सुधीर्गुणी । कुतः स एव संसारे, स्याद्वादा-
लङ्कृतो नरः ॥ ५४५ ॥ तदन्वगतं सर्वमैहिकं शान्तिमस्तुनः । जीवनोत्थं मोक्ष-
रूपमपुनरागतिसंततम् ॥ ५४६ ॥ समुत्थानमयं लोके, चाक्षयं बन्धवर्जितम् ।
कुक्षिवत् सैव विज्ञेया, अव्याबाधस्य धामनि ॥ ५४७ ॥ पर्वोऽर्हन्नवंभूवर्षे, विक्रमा-
र्कस्य संवति । मधुमासेऽथ धवले, पक्षे दशमीगत्तिथौ ॥ ५४८ ॥ स्तिकर्पोऽयं
समाप्तश्च, श्रीपुष्प-भिक्षुणा कृतः । श्रीमत्फकीरचन्द्रस्य, मुनेः शिष्येण
धीमता ॥ ज्ञातपुत्रमहावीरजैनसङ्घानुयायिना ॥ ५४९ ॥

मङ्गलं भगवान्वीरो, मङ्गलं गौतमः प्रभुः ।
मङ्गलं स्थूलभद्राद्या, जैनधर्मस्तु मङ्गलम् ॥

शिवमस्तु सर्व्वजगतः, परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं, सर्व्वत्र सुखितो भवन्तु लोकाः ॥ १ ॥

## वीरस्तुति-परिशिष्ट नं० ७ :

## ॥ अथ वीरयोगतरङ्गः ॥

॥ मङ्गलाचरणम् ॥

योगाज्जानाति स्वात्मानं, योगः शान्तिं प्रयच्छति। योगान्मोक्षोऽभिसंयाति, योगादैशसमुन्नतिः ॥ योगान्निर्वैरतामेति, समाधिरचला भवेत्। योगेन समताऽऽयाति, तस्माद्योगात्मने नमः ॥ १ ॥ योगिनां सर्वतो मैत्री, योगी सम्मुदितां गतः। करुणान्वितो भवेद्योगी, योगे माध्यास्थ्यभावना ॥ २ ॥ योगशास्त्रे तथाऽन्यत्र, योगस्य प्रतिभाहिता। तेन योगतरङ्गस्य व्याख्या पद्येन गीयते ॥ ३ ॥ योगेन भित्त्वा षट् चक्रं, वायुं संस्थाप्य मूर्द्धनि। ब्रह्मरंध्रस्थकमले, सहस्रदलसंवृते ॥ ४ ॥ स्वान्तमाकृष्य विषयाज्जलबुद्बुदसन्निभात्। संस्थाप्य ज्ञानतो बध्वा, ध्रुवं ब्रह्मणि निष्कले ॥ ५ ॥ द्विविधं कर्म संन्यस्य, योगी यात्यपुनर्भवम्। तस्माच्च योगमाहात्म्यं, वर्तते सर्वतोऽधिकम् ॥ ६ ॥ अतश्च योगशास्त्रस्य, महत्त्वं वर्णितं बुधैः। तद्व्याख्यानं मयेदानीं, गीयतेऽभीष्टसिद्धये ॥ ७ ॥ योगो निर्मलचेतसां वितनुतेऽप्यष्टाङ्गसिद्धिं पुनर्योगात्तेन मनो नियम्य यतयो याताः पदं निर्भयम्। योगोऽज्ञानमयान्धकारतरणिर्योगाच्च चान्योऽपरस्तस्माद्योगमुपाश्रयन्त्वनुदिनं यो योगिनामिष्टदः ॥ ८ ॥ संसारेऽत्र सुखं ग्राह्यं, हेयं दुःखमिति स्थितिः। इत्यनुसृत्य वाञ्छन्ति, सुखं प्रत्येकप्राणिनः ॥ ९ ॥ दुःखं तत्कारणं वेत्ति, ते नेच्छन्ति कदाचन। तस्मात्सुखाप्तये योगः, सेवनीयः सुखार्थिभिः ॥ १० ॥ न चैतावद्धि मात्रेण, प्रत्युतैवं सुखर्द्धये। नित्यं कुर्वन्त्युपायं वै, शतशो यत्नतो मुदा ॥ ११ ॥ तैरुपायैर्यदाऽनन्तं, जायते सफलाः क्रियाः। तदाऽनन्तसुखावाप्तिं, लब्ध्वा यान्ति कृतार्थताम् ॥ १२ ॥ इत्थं मत्वा सुखाप्त्यर्थं, सर्वसाधकसाधने। मुख्यो धर्मो न चान्योऽस्ति, तस्माद्धर्ममुपाश्रयेत् ॥ १३ ॥ स च योगात्परो नान्यो, ज्ञातव्यो योगसाधकैः। एवं धर्मो धारणीयः, सत्सुखप्राप्तिकरो यतः ॥ १४ ॥ योगतो लभ्यते स्वर्गोऽपवर्गश्च महात्मभिः। कायस्य चैधते कान्तिरुज्ज्वलात्मसुखोदया ॥ १५ ॥ वर्तमाने युगे चास्मिन्ननेकमततत्परिणि। पार्टिबाजी सम्प्रदायसद्धाऽऽगच्छटोलकाः ॥ १६ ॥ वर्तन्ते ये च धर्मस्य, नामोपरि चलन्ति ते। तेऽस्मरगृहीदका भूत्वा विहरन्ति यथेच्छया ॥ १७ ॥ योगसाधनतत्त्वे च, विमुखा निजशिष्यके। सुखसाधनदानार्थमसमर्था भवन्ति ते ॥ १८ ॥ स्वसम्प्रदायसघस्या

निर्वाहार्थं बहुक्रियाः । परम्परया विज्ञानं, घोषयन्ति सदार्थिनः ॥ १९ ॥ तथा परम्पराचक्रानुसारेणैव शिष्यकाः । कुर्वन्ति ताः क्रियाः शश्वन्नर्तनैर्नर्तनैर्मुदा ॥२०॥ अस्यां दशायां केचित्तु, कदाचित्सुखवाञ्छया । प्राणिनश्चेदृशाः सन्ति, येषां चित्तं न सुस्थिरम् ॥ २१ ॥ सन्तोषः सुखसिद्ध्यर्थमसन्तोषाद्दुःखदर्शी । भद्रपरिणामवन्तो, जीवाः सुखविवृद्धये ॥ २२ ॥ रक्षं खेदं च कुर्वन्ति, सदैकीभावमास्थिताः । रजः प्रक्षेपणेऽप्येवं, न पृथग्भावमश्नुते ॥ २३ ॥ सुखं तत्साधनं तद्धर्मं ये चानुवन्ति ते । नान्यथाऽभ्यन्तरोपायैर्दृश्यतामिह चार्थिभिः ॥ २४ ॥ एवं प्रवर्तितं चक्रं, तदग्रे सफलीभवेत् । सत्यात्मकस्य सर्वस्य, सुखस्य साधनं बहु ॥ २५ ॥ समये प्राप्नुवन्त्येवं, न चाचेति सनातनम् । इत्थं दयामयीं तेषां, स्थितिं प्रतिपद्यन्यते ॥ २६ ॥ सार्धं ज्ञातुं स्वर्यिनं च, सुखं वास्तविकं पुनः । सत्यसाधनसद्भावं, कर्तुमप्यात्यवश्यकम् ॥ २७ ॥ सत्यसाधनयोगो हि, सर्वोपरि विराजते । तथाऽद्वितीयं संमान्यं, चमत्कारकरं पुनः ॥ २८ ॥ अस्ति साधनकं पुण्यं, प्राप्यते तद्गुरोर्मुखात् । उपयोगे प्रकुर्वन्तः, स्वल्पकालेन तत्सुखम् ॥ २९ ॥ अवश्यमेव लब्धव्यमखण्डमव्ययं ध्रुवम् । योगश्चैतादृशं वस्तु, न स्वयं ज्ञायते क्वचित् ॥ ३० ॥ योगयुक्तादात्मविदः, कस्मादपि महात्मनः । ज्ञातव्यो विषयासक्ताप्यते स हि योगिनः ॥ ३१ ॥ यथोदरभरो योगी, संसारासक्तचेतनः । बाह्यतः साधुवद्वृत्तिस्तस्मै योगोऽस्ति दुर्लभः ॥ ३२ ॥ एवं भूतयोगिनश्च, नाप्यते योगसाधनम् । तस्माच्छास्त्रपरो योगः, शिक्षणीयो महात्मनः ॥ ३३ ॥ योगिनोऽद्य न लभ्यन्ते, भारते योगधारकाः । परं प्रयत्नकरणाल्लब्धव्या योगिनोऽधुना ॥ ३४ ॥ सुयोगाभ्यासतो नित्यं, समाधानेन चेतसा । अथवा दूरतः स्वयं, कंचिद्योगविदं जनम् ॥ ३५ ॥ समाश्रयन्तु येन स्यात्साध्यसाधनमुत्तमम् । परन्त्वियं कर्तव्यं, स्मरणं साधनं विना ॥ ३६ ॥ नाप्यते सत्सुखं केचिदिति जानन्तु साधकाः । परन्तु स्वसमीपेऽस्ति, तत्सुखं स्वात्मनि स्थितम् ॥ ३७ ॥ अन्तर्दृष्टितोऽभ्यासाज्ज्ञापयन्ति सुखं परम् । येषां सनातनस्यैवं, सुखालीढोपलब्धये ॥ ३८ ॥ योगसाधनवाञ्छा चेद्योजनीयं मनो मुहुः । योगस्य योगिनां चात्र, महत्त्वं परमोत्कैः ॥ ३९ ॥ गीतायां तत्र कृष्णेन, सर्वमुख्यं महात्मना । तपस्विभ्योऽधिको योगी, इति श्लोकेन वर्णितम् ॥ ४० ॥ अनेकधोपवासादितपो दीर्घादिदीर्घकम् । कृत्वाऽपि च न लभ्येत, योगी कश्चिन्महोदयः ॥ ४१ ॥ अतो योगी महानस्ति, सर्वतो भारते कलौ । नयनिक्षेपदेवादेरपुण्यभाक्कं तथा ॥४२॥

जीवादिसंख्यां संख्यातुमुत्सुका ज्ञानिनां वराः । तेभ्योऽप्यस्ति महान् योगी, तथा कर्मकरादपि ॥४३॥ अतोऽर्जुन ! भव त्वं हि, योगी योगात्परो न हि । योगयुक्तो विशुद्धात्मेत्यादिश्लोकेन वर्णितम् ॥४४॥ श्रीमत्कृष्णेन महता, चार्जुनाय विदे मुहुः । तदाशयश्चेत्थमस्ति, ज्ञातव्यो योगवित्तमैः ॥ ४५ ॥ आत्मजेतेन्द्रियाहर्ता, तथा भूतेषु भावना । स्थापनीया समा शश्वदिति शास्त्रमतं सदा ॥ ४६ ॥ योगी जनः कर्म कुर्वन्निष्कर्मैव स जायते । अर्थात् कर्मलेपनाच्च, न कदापि स लिप्यते ॥४७॥ यथाऽम्भसि गतं पद्मं, न स्पृशेत्तज्जलं क्वचित् । तथैव योगसम्पन्ना, न लिम्पन्ति च कर्मभिः ॥ ४८ ॥ एवमेव च सम्प्रोक्तं, जैनशास्त्रेऽपि न्यायतः । [ अग्गं च मूलं ] चे त्यादिशेयं स्याद्वदकं पुनः ॥ ४९ ॥ मूलकर्माऽग्रकर्मणो, भेदं ज्ञात्वा विवेकतः । एवं ज्ञात्वा मुक्तमोऽपि, निष्कर्मा साधको भवेत् ॥ ५० ॥ निष्कर्मकारिणो चेत्थं, न भवेन्न कदाचन । उपाध्युत्पातकं चेति, लौकिकं सर्वकर्म च ॥ ५१ ॥ केवलं दर्शनार्थाय, दृश्यते चेदृशं क्वचित् । योगयुक्तात्मनः कार्यं, योगक्षेमस्य वाहकम् ॥ ५२ ॥ भवेदयं च योगो हि, चिरकालात्समागतः । प्रवर्तकश्चास्य योगस्यानादेः ऋषभो जिनः ॥ ५३ ॥ तीर्थकृतामादिभूतः, श्रीमानृषभदेवकः । जिनराजोऽभवद्योगी योगिनां प्रवरो मुनिः ॥ ५४ ॥ मनोनिग्रहणाऽऽदेशो, निर्दिष्टः पूर्वमेव च । तेनाज्ञा च प्रदत्ताऽत्र, सर्वाधिक्येन ज्ञानतः ॥ ५५ ॥ बहुजीवनिकायानां, सन्मुखं जगतः परम् । दृष्टिमात्रेण यत्क्षोभं, मनः प्राप्तं च यन्मुहुः ॥ ५६ ॥ भूयाऽक्षुब्धं पुनश्चात्मसंमुखं यत्प्रवर्तितम् । पुनस्तदेवानन्दं च, लब्ध्वा प्रत्यक्षमेव वा ॥ ५७ ॥ कदोत्तमनुभवं तस्य, मनसोऽतो निरोधनम् । कर्तव्यं हि तदेवास्ति, योगो योगविदां मते ॥ ५८ ॥ इदमेव हि योगस्य, लक्षणं प्रोक्तवानिति । पतंजलिमुनिश्चापि, योगसूत्रेण श्रूयताम् ॥ ५९ ॥ **चित्तवृत्ति-निरोधाख्यो**, योगश्चोक्तः पुरातनः । अत्युत्तमस्य योगस्य, पात्रं हि श्रीनरादयः ॥ ६० ॥ चतुर्वर्णप्रमाणं च, लोकनामत्र चास्ति वै । अधिकारश्च योगस्य, साधनेनास्ति निर्णयः ॥ ६१ ॥ योगेनैव यशस्तेजो, वर्धते योगिनां मुहुः । योगतश्चकपङ्कं च, मिलोर्द्धं याति साधकः ॥ ६२ ॥ निर्वाणपदमागम्य, जरामरणवर्जितः । अतोऽत्र निर्णयो नास्ति, योगे जातिभिदो मुधा ॥६३॥ जातिभेदात्मको भेदो, नावदया प्रविचारणे । चाण्डालजातिसम्पन्नो, जनोऽपि योगवित्तमः ॥६४॥ भवितुं शक्यते योगी, महात्माऽपि स्वतन्त्रतः । पञ्चविंशतिशतात्पूर्वं, हरिकेशी मुनीश्वरः ॥ ६५ ॥ स च चाण्डालजातीयो, जातश्चेति तथाऽपि च । योगतो

योगाभ्याससंसिद्धिस्तत्रैव खलु जायते । यत्सुखं वीतरागस्य, मुनेरेकान्तवासिनः । तत्सुखं देवराजस्य, चक्रिणो न कदाचन ॥ ९१ ॥ नासनेन विना सिद्धिर्जायते न रजोवृते । रहःस्थाने चेदासनस्य, ज्ञेयमावश्यकं मुहुः ॥ ९२ ॥ दर्भासनं प्रशस्तं स्याद्योगिनां च मुदे पुनः । कम्बलेन तदाच्छाद्यं, सर्वथा योगधारकैः । एतादृशे साधकानामासने शक्तिरुज्ज्वला । जायते ननु कायस्य, विद्युत्कोटिसमप्रभा ॥ ९३ ॥ बुद्धिरत्युत्तमा वेति, नो विशेषस्तु कासने । तत्रासने साधनतो, योगो निष्फलतां व्रजेत् ॥ ९४ ॥ भगवत्यादिसूत्रेषु, प्रोक्तं दर्भासनं शुभम् । 'दब्भ संथारगं' चेति, सूत्रार्थेनोपवर्णितम् ॥ ९५ ॥ गणधरस्य मुनेश्च, गौतमस्य तथा पुनः । केशिस्वामीत्यादिना च, स्वागतार्थं समाहितम् ॥ ९६ ॥ आगन्तुकेभ्यो नितरां, सुदर्भासनमेव हि । प्रदत्तं चोपवेशार्थमित्येवं च तदासनम् ॥ ९७ ॥ प्रशस्तं सर्वासनेभ्यो, सुदर्भासनसुचकैः । जैनानां च तथा रीतिरेषा दर्भासनार्पणे ॥ ९८ ॥ तदभावे प्रशस्तं स्यात्कम्बलासनमेव च । दर्भासनोपरिष्ठात्तु, कम्बलासनमिष्यते ॥ ९९ ॥ ततः पद्मासनं बद्ध्वा, मनसोऽप्यनुकूलतः । पुनरासनेऽस्मिो च, साधनं समुपविश्य च ॥ १०० ॥ साधयेच्छुद्धमनसा, योगं योगस्य सिद्धये । दिशि पूर्वे चोत्तरे च, मुखं कृत्वा समभ्यसेत् ॥ १०१ ॥ तदेवोक्तं **'पुरत्थाभिमुहे' 'सपलियंकनिसण्णया'** इत्येवं कथितं सर्वमासनं क्रमतो जिनैः ॥ १०२ ॥ कमलाख्ये वा पर्यङ्के, स्थित्वा चाप्युत्तमासने । मुखं पूर्वदिशि कृत्वा, वामहस्ते च दक्षिणम् ॥१०३॥ करं धृत्वा कटिं तद्वत्कण्ठे चैवं च मस्तकम् । सदैकपंक्तौ संस्थाप्य, साधयेदप्रमादतः ॥ १०४ ॥ स्थाप्यं श्मश्रुविभागेऽधो, हनौ स्वन्तर्गते पुनः । ईदृगासनमारूढो, योगी याति परं शमम् ॥ १०५ ॥ प्रातर्दिनान्ते च पुनर्निशायां, पूर्वे परे याममये च काले । मध्याह्नवेलासुसमाहितः सन्, योगी सदाऽनेन सदासनेन ॥ १०६ ॥ करोतु योगस्य सुसाधनं वै, यदेकयाऽनन्तसुखेन योगी । भूत्वा स्थिरो जातु सदा, सुशक्यस्तदा च ज्ञेया विजयोपलब्धिः ॥ १०७ ॥ जातासने चासनसिद्धिरग्रा, विनासनाद्धि विजयो न योगः । सिद्धचेत्पयो प्राणशरीरवृत्तौ, तदा सुदृष्टौ विजयोऽपि लभ्यः ॥ १०८ ॥ प्राणेन्द्रिये चापि तनौ सुदृष्टौ, प्राप्नोति योगी विजयं समन्तात् । सदेत्यमेवं च विना न योगमात्मोपलब्धिर्भवतीति ज्ञेयम् ॥ १०९ ॥ अतो नितान्तं श्रमतो गुरोश्च, युक्तेर्विशेषेण च प्रापणीयः । जयोऽप्यजस्रं खलु स्वासनस्य, जानन्तु सर्वे मुनयो नितान्तम् ॥ ११० ॥ जितासनानन्तरमेव शश्वद्यमादिनियमादिजयोऽपि लभ्यः । जितासनानन्तरसाधकेन, संल-

॥ १२८ ॥ अयञ्च प्रयासो यदा वृद्धिमेति, प्रकृतिप्रत्येकं पदार्थान्तरेऽपि, । तदा प्रेमवृद्धिः प्रयात्येव नूनं, तथा सृष्टिप्रत्येकमंशेऽपि ज्ञेया ॥ १२९ ॥ मुदा वीतरागत्वमुत्कृष्टतायाः, प्रभावस्य स्याद्वर्तनं योगसिद्धौ । प्रयत्नोऽपि स्यादुत्कटत्वेन शश्वत्तदानीं मुहूर्तोन्तमुत्थापनीयः ॥ १३० ॥ ततः सृष्टिभागेऽपि स्याच्चेत्सुदृष्टिर्मुखं स्थापयित्वा च तत्रैव सृष्टिः । स्थिरीभावमागत्य कायस्य स्वस्य, स्वपिण्डादिभिः, स्वस्य दुःखं पुनश्च ॥ १३१ ॥ मुहुः प्लवयते तादृशावस्थया, मुखं साधके नाप्यते शीघ्रतः । प्रभुनाम्नो मुहुर्भावनानामकं, जपं प्रेमतो योगजन्यं पुनः ॥ १३२ ॥ तदा प्रारमेवेच्छया शब्दकोच्चारणं ॐ नमो जापमेवं जपेत् । अनेनार्हदेवं भजेत्प्रेमतः, सर्वकाले सदा ॐ पदं लुप्यते; पुनः शब्ददेव स्वयं नामतः ॥ १३३ ॥ ततश्चात्मनि प्रेमतश्चार्हतीति, प्रभावैकचक्रासुस्मृतिस्ततः । स्वयं सक्षणं जायते प्रेमतो, यथा चावकाशं परं तत्वतः ॥ १३४ ॥ चलंश्चोपशान्त्या भ्रमन्वा विश्रान्सदोत्तिष्ठमानः शयानोऽपि च । तथा जाग्रतो भुञ्जमानश्च तत्र ध्यानं कदाचित्सरेत्क्रमयतः ॥ १३५ ॥ निशान्ते दिनान्ते च मध्यान्हके, निशायां सुयोगः क्रियामारभेत ॥ सदाऽजापजापं जपेत्सस्मरेत्कतो योगद्वारैव सद्भावना, दृढत्वं भवेद्योगतो नान्यतः ॥ १३६ ॥ आपमेवं जपेत्प्रेमभावेन च, तथा हि द्वयं साधनं सर्वतो । मिलित्वा मनः शान्तभावं भजेन्मनोऽश्वो भयंकरको दुःखदः ॥ १३७ ॥ तथा साहसाधारत्वं भवेन्मनो रूपवशस्तथा चेन्द्रियं, घोटकोऽस्ति बलिष्ठ इति ज्ञायतां, परं चेदृशेन प्रयासेन च ॥ १३८ ॥ ततो मत्तता याति तेषां बहिः । ततस्ते भवेयुः प्रशान्ताः पुनः ॥ ततश्चेदृशेन प्रसरेण च, भवेत्साधकानां विवेकान्विता ॥ १३९ ॥ तथेवं च दृष्टिश्च सूक्ष्मा मुहुः, महेवानयेदात्मिकानन्दकम् । इदं साधनं स्याच्च सन्तोषवरहेतुस्तदा साधकः स्वस्य च, प्रवृत्ति निवृत्तिं च सपश्यत ॥ १४० ॥ आत्मानं सारथिं विद्धि, शरीरं रथमेव तु । इन्द्रियाणि हयानाहुर्मनः प्रग्रहमेव च ॥ १४१ ॥ परावृत्य यत्त्राटकं बाह्यवृत्त्या, कृतं तत्र कुर्वन्तु वाऽभ्यन्तरीया । शुभं त्राटकं दृष्टितो योगसिद्धौ, भवेद्योगिनां साधने सम्प्रवृत्तिः ॥ १४२ ॥ श्वासोच्छ्वासक्रयोर्दृष्टिः, पूर्वं स्थाप्या प्रयत्नतः । बहिर्याति यदा श्वासस्तदा 'सो' शब्द इर्ष्यते ॥ १४३ ॥ जाते चाभ्यन्तरे शब्दहं शब्दः स्वभावतः । जायते च द्वयोर्योगे, 'सोहं' मित्युपयुज्यते ॥ १४४ ॥ जापं विनैव संतिष्ठेदजपाजापमुत्तमम् । तेनैवाथापवर्गस्य, प्राप्तिर्भवति योगिनाम् ॥ १४५ ॥ ध्यानेन यत्र सम्पश्येद्यदा श्वासोऽभिजन्यते । यत्र लीनो भवेच्छ्वासस्तत्र वृत्तिप्रयासतः ॥ १४६ ॥ स्थापये-

